श्री

# पाराशरधर्मशास्त्र

अथवा

## पराशर महर्षिए कहेली स्मृति

तेनो

मूल संस्कृत पाठ तथा तेउपरथी गुजराती भाषान्तर

डाह्याभाई घेलाभाई पंडिते

कर्युं.

॥ श्रेयान् स्वधर्मोविगुणः परधर्मात्स्वनुष्ठितात् ॥
॥ स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥


मुंबई.

सम्वत् १९२५,

शके १७९०, इ० स० १८६९

આ ગ્રંથ ઈ૰ સ૰ ૧૮૬૭ ના આક્ટ ૨૫ પ્રમાણે રજીસ્ટર કર્યો છે.

मुंबई मध्ये

गणपत कृष्णाजीना छापखानामां कानोबा गणपतरावना एक्सिक्युटर
राव॰ वि॰ ना॰ मंडलिक तथा गो॰ गं॰ फडके एओए
छाप्युं.

शेठ मथुरादास लवजी

स्वदेशीओमां ज्ञाननो प्रसार करवामां

उत्तेजन आपनार

एओने

# पाराशरधर्मशास्त्र

अथवा

पाराशरस्मृति

तेनो

आ

मूल संस्कृत पाठ तथा तेनुं गुजराती भाषान्तर

परमसत्कारपूर्वक

डाह्याभाई घेलाभाई पंडिते

अर्पण कर्युं.

# अनुक्रमणिका.



## अध्याय पेहेलो.

## અધ્યાય બીજો.



## અધ્યાય ત્રીજો.

## અધ્યાય ચોથો.

## અધ્યાય પાંચમો.



## અધ્યાય છઠ્ઠો.



## અધ્યાય સાતમો.

## अध्याय आठमो.

## अध्याय नवमो

# अध्याय दशमोः



# अध्याय अगियारमो.

## अध्याय बारमो.

श्रीः

कलिधर्म्मनिर्णायिकासु धर्म्मसंहितासु प्रधानतमा भगवता प-
राशरर्षिणा प्रणीतेयं पाराशरधर्म्मसंहिता अलब्धगाधतया गभीरार्था
सौष्ठववत्तया चोत्तानार्थापि सैषा विद्वज्जनमनस्तोषपोषमीहमानेन
मया काश्यादौ उपलब्धान् व्याख्यानुगतान् तद्रहितांश्च कतिपयाद-
र्शानेकीकृत्य सर्वैकमत्येन परिशोध्य च लौहाक्षरैर्मुद्रिता अस्यां च ध-
र्म्मसंहितायां आचारप्रायश्चित्तविचारोभूयानस्ति अत्यल्पीयान् व्य-
वहारविचारोपि क्वचिदस्ति एवं आचारविचारतोपि प्रायश्चित्तविचा
रोधिकोस्ति सर्व्वमिदं विपश्चिज्जनसुवेद्यमेव परं संस्कृतगव्यविदुषा-
मितरेषामपि एतदर्थलाभोभवत्विति मनसि कुर्व्वाणेन मया अस्याः
स्मृतेर्गौर्जर्या भाषया भाषान्तरं निर्म्माय एतदंते संयोजितमस्ति तच्च
क्वचित् पुरुषमात्रसाधारणाभ्यां भ्रमप्रमादाभ्यां दोषपंकिलमपि स्या-
त् अथापि निर्मत्सराः संतः तत् संशोध्य विश्वावसूयंताम् तेनचेहे-
तमामात्मनः श्रमद्रोः फलेग्रहितामिति विज्ञापना.

ज्ञा० वे० पं०

# पाराशरस्मृतेः

## शुद्धिपत्रं

| अध्यायः | श्लोकः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | ३ | तच्छ्रुत्वा | तच्छ्रुत्वा |
| २ | ६ | ऋतुदीक्षां | ऋतुदीक्षां |
| ३ | १३ | रुष्णाष्टमी | रुष्णाष्टमी |
| ३ | ४८ | ४७ | ४८ |
| ७ | ९ | वृषलीसेवन | वृषलीसेवनं |
| १० | ४ | ततश्चीण | ततश्चीर्णे |
| १० | १६ | जनक्षय | जनक्षये |
| १० | २२ | दद्याच्छुद्धिः | दद्याच्छुद्धिं |
| १० | ३४ | भर्ताचैव | भर्ताचैव |
| ११ | ५ | तू | तु |

॥ श्रीगणेशायनमः ॥

# अथ

# पाराशरीये धर्मशास्त्रे

## प्रथमोध्यायः



### चातुर्वर्ण्याचारः

अथातोहिमशैलाग्रे देवदारुवनालये

व्यासमेकाग्रमासीनमपृच्छन्नृषयः पुरा ॥ १ ॥

मानुषाणां हितं धर्मं वर्त्तमानं कलौ युगे

शौचाचारं यथावच्च वद सत्यवतीसुत ॥ २ ॥

तच्छ्रुत्वा ऋषिवाक्यं तु सशिष्योग्न्यर्कसन्निभः

प्रत्युवाच महातेजाः श्रुतिस्मृतिविशारदः ॥ ३ ॥

न चाहं सर्वतत्वज्ञः कथं धर्मं वदाम्यहम्

अस्मत्पितैव प्रष्टव्यइति व्यासः सुतोवदत् ॥ ४ ॥

ततस्तु ऋषयस्सर्वे धर्मतत्वार्थकांक्षिणः

ऋषिं व्यासं पुरस्कृत्य गता बदरिकाश्रमं ॥ ५ ॥

नानापुष्पलताकीर्णं फलवृक्षैरलंकृतं
नदीप्रस्रवणोपेतं पुण्यतीर्थोपशोभितं ॥ ६ ॥
मृगपक्षिनिनादाढ्यं देवतायतनावृतं
यक्षगंधर्वसिद्धैश्च नृत्यगीतैरलंकृतं ॥ ७ ॥
तस्मिन्नृषिसभामध्ये शक्तिपुत्रं पराशरं
सुखासीनं महातेजा मुनिमुख्यं गुणावृतं ॥ ८ ॥
कृतांजलिपुटोभूत्वा व्यासस्तु ऋषिभिः सह
प्रदक्षिणाभिवादैश्च तमृषिं समपूजयत् ॥ ९ ॥
ततस्संतुष्टहृदयः पराशरमहामुनिः
आह सुस्वागतं ब्रूहीत्यासीनो मुनिपुंगवः॥ १० ॥
कुशलं सम्यगित्युक्त्वा व्यासः पृच्छत्यनंतरं
यदि जानासि भक्तिं मे स्नेहाद्वा भक्तवत्सल॥ ११ ॥
धर्मं कथय मे तात अनुग्राह्योस्म्यहं तव
श्रुता मे मानवाधर्मा वासिष्ठाः काश्यपास्तथा॥ १२
गार्गीयागौतमीयाश्च तथा चौशनसास्स्मृताः
अत्रेर्विष्णोश्च संवर्ताद्दक्षादंगिरसस्तथा ॥ १३ ॥
शातातपाच्च हारीताद्याज्ञवल्क्यात्तथैव च
आपस्तंबकृताधर्माः शंखस्य लिखितस्य च॥ १४॥

कात्यायनकृताश्चैव तथा प्राचेतसान्मुनेः
श्रुतास्त्वेते भवत्प्रोक्ताः श्रुत्यर्थामे न विस्मृताः॥ १५॥
अस्मिन्मंन्वंतरे धर्माः कृते त्रेतादिके युगे
सर्वे धर्माः कृते जाताः सर्वे नष्टाः कलौ युगे॥ १६॥
चातुर्वर्ण्यसमाचारं किंचित्साधारणं वद
चतुर्णामपि वर्णानां कर्तव्यं धर्मकोविदैः ॥१७॥
ब्रूहि धर्मं स्वरूपज्ञ सूक्ष्मं स्थूलं च विस्तरात्
व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः॥ १८॥
धर्मस्य निर्णयं प्राह सूक्ष्मं स्थूलं च विस्तरात्
शृणु पुत्र प्रवक्ष्यामि शृण्वंतु मुनयस्तथा ॥ १९॥
कल्पे कल्पे क्षयोत्पत्त्या ब्रह्मविष्णुमहेश्वराः
श्रुतिस्मृतिसदाचारा निर्णेतारश्च सर्वदा ॥ २० ॥
न कश्चिद्वेदकर्ता च वेदं स्मृत्वा चतुर्मुखः
तथैव धर्मान्स्मरति मनुः कल्पांतरेंतरे ॥ २१ ॥
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे युगे
अन्ये कलियुगे नृणां युगरूपानुसारतः ॥ २२ ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥ २३ ॥

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः
द्वापरे शंखलिखिताः कलौ पाराशराःस्मृताः॥ २ ४॥
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्
द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे ॥ २ ५ ॥
कृते संभाषणादेव त्रेतायां स्पर्शनेन च
द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥ २ ६ ॥
कृते तत्क्षणकः शापस्त्रेतायां दशभिर्दिनैः
द्वापरे त्वेकमासेन कलौ संवत्सरेण तु ॥ २ ७ ॥
अभिगम्य कृते दानं त्रेतास्वाहूय दीयते
द्वापरे याचमानाय सेवया दीयते कलौ ॥ २ ८ ॥
अभिगम्योत्तमं दानमाहूयैव तु मध्यमं
अधमं याचमानाय सेवादानं तु निष्फलं ॥ २ ९ ॥
जितोधर्मोह्यधर्मेण सत्यं चैवानृतेन च
जिताश्चौरैश्च राजानः स्त्रीभिश्च पुरुषाः कलौ॥ ३ ०॥
सीदंति चाग्निहोत्राणि गुरुपूजा प्रणश्यति
कुमार्यश्च प्रसूयंते अस्मिन्कलियुगे सदा ॥ ३ १॥
कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः
द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः॥ ३ २॥

युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः
तेषां निंदा न कर्त्तव्या युगरूपा हि ते द्विजाः॥ २ ३॥
युगे युगे तु सामर्थ्यं शेषं मुनिविभाषितं
पराशरेण चाप्युक्तं प्रायश्चित्तं विधीयते ॥ ३ ४॥
अहमद्यैव तत्सर्वमनुस्मृत्य ब्रवीमि वः
चातुर्वर्ण्यसमाचारं श्रृण्वंतु मुनिपुंगवाः ॥ ३ ५ ॥
पराशरमतं पुण्यं पवित्रं पापनाशनं
चिंतितं ब्राह्मणार्थाय धर्मसंस्थापनाय च ॥ ३ ६॥
चतुर्णामपि वर्णानामाचारो धर्मपालकः
आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः॥ ३ ७ ॥
षट्कर्माभिरतो नित्यं देवतातिथिपूजकः
हुतशेषं तु भुंजानो ब्राह्मणो नावसीदति ॥ ३ ८॥
संध्या स्नानं जपो होमो देवतातिथिपूजनं
आतिथ्यं वैश्वदेवं च षट्कर्माणि दिने दिने॥ ३ ९॥
इष्टो वा यदि वा द्वेष्यो मूर्खः पंडितएव वा
वैश्वदेवे तु संप्राप्तः सोतिथिः सर्वसंगमः ॥ ४ ० ॥
दूराध्वोपगतं श्रांतं वैश्वदेवउपस्थितं
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः॥ ४ १॥

नपृच्छेद्गोत्रचरणे स्वाध्यायं च व्रतानि च
हृदयं कल्पयेत्तस्मिन्सर्वदेवमयोहि सः ॥ ४२ ॥
नैकग्रामीणमतिथिं संगृह्णीत कदा च न
अनित्यमागतोयस्मात्तस्मादतिथिरुच्यते ॥ ४३ ॥
अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना
तथासनप्रदानेन पादप्रक्षालनेन च ॥ ४४ ॥
आसनाऽवसथौ शय्यामनुव्रज्यामुपासनम्
उत्तमे उत्तमं कुर्याद्धीने हीनं समे समं ॥ ४५ ॥
अपूर्वः सव्रती विप्रोह्यपूर्वश्चातिथिस्तथा
वेदाभ्यासरतो नित्यमपूर्वो हि दिने दिने ॥ ४६ ॥
वैश्वदेवे तु संप्राप्ते भिक्षुके गृहमागते
उद्धृत्य वैश्वदेवार्थं भिक्षुकं तं विसर्जयेत् ॥ ४७ ॥
यतिश्च ब्रह्मचारी च पक्कान्नस्वामिनावुभौ
तयोरन्नमदत्वा तु भुक्त्वा चांद्रायणं चरेत् ॥ ४८ ॥
दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणोः
इच्छया च ततो दद्याद्विभवे सत्यवारितं ॥ ४९ ॥
यतिहस्ते जलं दद्याद्भैक्ष्यं दद्यात्पुनर्जलं
तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमं ॥ ५० ॥

वैश्वदेवकृतान्दोषान् शक्तोभिक्षुर्व्यपोहितुं
नहि भिक्षुकृतान्दोषान्वैश्वदेवोव्यपोहति ॥५१॥
वैश्वदेवविहीनाये आतिथ्येन विवर्जिताः
सर्वे ते नरकं यान्ति काकयोनिं व्रजंति ते ॥५२॥
चौरो वा यदि चांडालः शत्रुर्वा पितृघातकः
वैश्वदेवे तु संप्राप्ते सोतिथिः सर्वसंगमः ॥ ५३ ॥
यो वेष्टिताशिरा भुंक्ते यो भुंक्ते दक्षिणामुखः
वामपादकरन्यस्तं तद्वै रक्षांसि भुंजते ॥ ५४ ॥
काष्ठभारसहस्रेण घृतकुंभशतेन च
अतिथिर्यस्य भग्नाशस्तस्य होमो निरर्थकः॥५५॥
ब्राह्मणस्य मुखं क्षेत्रं निरूषरमकंटकं
वापयेत्सर्वबीजानि सा कृषिः सार्वकामिकी ॥५६॥
सुक्षेत्रे वापयेद्बीजं सुपात्रे निक्षिपेद्धनं
सुक्षेत्रे च सुपात्रे च ह्युप्तं तन्न विनश्यति ॥५७॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते
पितरस्तस्य नाश्नंति दशवर्षाणि पंच च ॥ ५८ ॥
नानुगृण्हाति यो विप्रोह्यतिथिं वेदपारगम्
अदत्वा चान्नमात्रं तु भुक्त्वा भुंक्ते तु किल्विषं॥५९॥

अव्रताश्चनधीयाना यत्र भैक्ष्यचरा द्विजाः
तं ग्रामं दंडयेद्राजा चौरभक्तप्रदो हि सः॥ ६० ॥
क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रदंडवान्
निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत्॥ ६१॥
पुष्पं फलं विचिनुयान्मूलच्छेदं विवर्जयेत्
मालाकारइवारामे न यथांगारकारकः ॥ ६२ ॥
लाभकर्म्म तथा रत्नगवां च परिपालनं
वाणिज्यं कृषिकार्यं च वैश्यवृत्तिरुदाहृता॥ ६३॥
शूद्राणां द्विजशुश्रूषा परधर्मः प्रकीर्तितः
अन्यथा कुरुते किंचित्तद्भवेत्तस्य निष्फलं॥ ६४॥
विक्रीणन्मद्यमांसानि ह्यभक्ष्यस्य च भक्षणं
कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ॥ ६५ ॥
लवणं मधु तैलं च दधि तक्रं घृतं पयः
न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयं ॥ ६६॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च
वेदाक्षरविचारेण शूद्रस्य नरकं ध्रुवं ॥ ६७ ॥
इति श्रीपाराशरीये धर्मशास्त्रे चातुर्वर्ण्याचारोनाम
प्रथमोध्यायः

# द्वितीयोध्यायः

## गृहस्थधर्मविचारः

अतःपरं गृहस्थस्य कर्माचारं कलौ युगे
धर्मं साधारणं शक्त्या चातुर्वर्ण्यक्रमागतं ॥ १ ॥
तं प्रवक्ष्याम्यहं पूर्वं पराशरवचो यथा
षट्कर्मनिरतोविप्रः कृषिकर्म समाचरेत् ॥ २ ॥
क्षुधितं तृषितं श्रांतं वलीवर्द्दं न योजयेत्
हीनांगं व्याधितं क्लीवं वृषं विप्रो न वाहयेत् ॥३॥
स्थिरांगं नीरुजं दृप्तं सुनर्द्दं षंढवर्जितं
वाहयेद्दिवसस्यार्द्धं पश्चात्स्नानं समाचरेत् ॥ ४ ॥
जप्यं देवार्चनं होमं स्वाध्यायं चैवमभ्यसेत्
एकद्वित्रिचतुर्विप्रान्भोजयेत्स्नातकान् द्विजः॥५॥
स्वयंकृष्टे यथा क्षेत्रे धान्यैश्च स्वयमर्जितैः
निर्वपेत्पंचयज्ञांश्च क्रतुदीक्षां च कारयेत् ॥ ६ ॥
तिलारसा न विक्रेया विक्रेयाधान्यतः समाः
विप्रस्यैवंविधा वृत्तिस्तृणकाष्ठादिविक्रयः ॥ ७॥

ब्राह्मणश्चेत्कृषिं कुर्यात्तन्महादोषमाप्नुयात्
संवत्सरेण यत्पापं मत्स्यघाती समाप्नुयात्
अयोमुखेन काष्ठेन तदेकाहेन लांगली ॥ ८ ॥
पाशकोमत्स्यघाती च व्याधः शाकुनिकस्तथा
अदाता कर्षकश्चैव सर्वे ते समभागिनः ॥ ९ ॥
वृक्षं छित्वा महीं भित्वा हत्वा च कृमिकीटकान्
कर्षकः खलयज्ञेन सर्वपापैः प्रमुच्यते ॥ १० ॥
यो न दद्याद्विजातिभ्योराशिमूलमुपागतः
स चौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत्॥ ११॥
राज्ञे दत्वा तु षड्भागं देवानां चैकविंशतिं
विप्राणां त्रिंशकं भागं सर्वपापैः प्रमुच्यते ॥ १२॥
क्षत्रियोपि कृषिं कृत्वा देवान्विप्रांश्च पूजयेत्
वैश्यः शूद्रस्तथा कुर्यात्कृषिवाणिज्यशिल्पकं॥ १३
विकर्म कुर्वते शूद्रा द्विजशुश्रूषणोज्झिताः
भवंत्यल्पायुषस्ते वै निरयं यांत्यसंशयं ॥ १४ ॥
चतुर्णामपि वर्णानामेषधर्मः सनातनः॥ १५ ॥
इति श्रीपाराशरीये धर्मशास्त्रे गृहस्थधर्माचारोनाम
द्वितीयोध्यायः

## तृतीयोध्यायः



### आशौचशुद्धिः

अतः शुद्धिं प्रवक्ष्यामि जनने मरणे तथा
दिनत्रयेण शुध्यंति ब्राह्मणाः प्रेतसूतके ॥ १ ॥
क्षत्रियो द्वादशाहेन वैश्यः पंचदशाहकैः
शूद्रः शुध्यति मासेन पराशरवचो यथा ॥ २ ॥
उपासने तु विप्राणामंगशुद्धिस्तु जायते
ब्राह्मणानां विशुद्धौ तु देहस्पर्शो विधीयते ॥ ३ ॥
जातौ विप्रोदशाहेन द्वादशाहेन भूमिपः
वैश्यः पंचदशाहेन शूद्रो मासेन शुध्यति ॥ ४ ॥
एकाहाच्छुध्यते विप्रो योग्निवेदसमन्वितः
त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥ ५ ॥
जन्मकर्मपरिभ्रष्टः सन्ध्योपासनवर्जितः
नामधारकविप्रस्तु दशाहं सूतकी भवेत् ॥ ६ ॥
एकपिंडास्तु दायादाः पृथग्दारानिकेतनाः
जन्मन्यपि विपत्तौ च तेषां तत्सूतकं भवेत् ॥ ७ ॥

तावत्तत्सूतकं गोत्रे चतुर्थपुरुषेण तु
दायाद्विच्छेदमाप्नोति पंचमो वात्मवंशजः॥ ८ ॥
चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पंचमे
षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयात् ॥ ९ ॥
भृग्वग्निमरणे चैव देशांतरमृतेथवा
बाले प्रेते च सन्यस्ते सद्यः शौचं विधीयते॥ १०
देशांतरमृतः कश्चित्सगोत्रः श्रूयते यदि
न त्रिरात्रमहोरात्रं सद्यः स्नात्वा विशुध्यति॥ ११
देशांतरगतो विप्रः प्रवासात्कालकारितात्
देहनाशमनुप्राप्तस्तिथिर्न ज्ञायते यदि ॥ १२ ॥
कृष्णाष्टमी त्वमावास्या कृष्णावैकादशी भवेत्
उदकं पिंडदानं च तत्र श्राद्धं च कारयेत्॥ १३॥
अजातदंता ये बाला ये च गर्भाद्विनिस्सृताः
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया॥ १४॥
यदि गर्भो विपद्येत स्रवते वापि योषितः
यावन्मासस्थितो गर्भो दिनं तावत्तु सूतकं॥ १५॥
आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः
अतः परं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥ १६॥

दंतजातेऽनुजाते च कृतचूडे च संस्थिते
अग्निसंस्करणे तेषां त्रिरात्रमशुचिर्भवेत् ॥ १७ ॥
आदंतजन्मनःसद्यआचूडान्नैशिकी स्मृता
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परं ॥ १८ ॥
ब्रह्मचारी गृहे येषां हूयते च हुताशने
संपर्कं चेन्न कुर्वंति न प्रेतं नच सूतकं ॥ १९ ॥
संपर्काद्दुष्यते विप्रोजनने मरणे तथा
संपर्काच्च निवृत्तस्य न प्रेतं नच सूतकं ॥ २० ॥
शिल्पिनः कारवोवैद्यादासी दासास्तथैव च
राजानः श्रोत्रियाश्चैव सद्यःशौचाः प्रकीर्तिताः २१
सव्रतः सत्रपूतश्च आहिताग्निश्च योद्विजः
राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः॥२२
उद्यतोनिधने दाने आर्तोविप्रोनिमंत्रितः
तथैव ऋषिभिर्दृष्टं यथाकालेन शुध्यति ॥२३॥
प्रसवे गृहमेधी तु न कुर्यात्संकरं यदि
दशाहाच्छुध्यते माता त्ववगाह्य पिता शुचिः२४
सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकं
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥२५॥

यदि पत्न्यां प्रसूतायां संपर्कं कुरुते द्विजः
सूतकं तु भवेत्तस्य यदि विप्रः षडंगवित् ॥ २६ ॥
संपर्काज्जायते दोषोनान्योदोषोस्ति वै द्विजे
तस्मात्सर्वप्रयत्नेन संपर्कं वर्जयेद्बुधः ॥ २७ ॥
विवाहोत्सवयज्ञेषु त्वंतरामृतसूतके
पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति ॥ २८ ॥
अंतरा तु दशाहस्य पुनर्मरणजन्मनी
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशं ॥ २९ ॥
ब्राह्मणार्थे विपन्नानां बंदिगोग्रहणे तथा
आहवेषु विपन्नानामेकरात्रमशौचकं ॥ ३० ॥
द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ
परिव्राड्योगयुक्तश्च रणे चाभिमुखोहतः ॥ ३१ ॥
यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः
अक्षयाँल्लभते लोकान्यदि क्लीबं न भाषते ॥ ३२ ॥
संन्यस्तं ब्राह्मणं दृष्ट्वा स्थानाच्चलति भास्करः
एषमे मंडलं भित्वा परं स्थानं प्रयास्यति ॥ ३३ ॥
यस्तु भग्नेषु सैन्येषु विद्रवत्सु समंततः
परित्राता यदा गच्छेत्सच क्रतुफलं लभेत् ॥ ३४ ॥

यस्य छेदक्षतं गात्रं शरमुद्गरयष्टिभिः
देवकन्यास्तु तं वीरं हरंति रमयंति च ॥ ३५ ॥
देवांगनासहस्राणि शूरमायोधने हतं
त्वरमाणाः प्रधावंति मम भर्त्ता ममेति च ॥ ३६ ॥
यं यज्ञसंघैस्तपसा च विप्रा
स्स्वर्गैषिणोवात्र यथैव यांति
क्षणेन यांत्येव हि तत्र वीराः
प्राणान्सुयुद्धेन परित्यजंतः ॥ ३७ ॥
जितेन लभ्यते लक्ष्मीर्मृतेनापि सुरांगनाः
क्षणविध्वंसिकार्येस्मिन्का चिंता मरणे रणे ॥ ३८ ॥
ललाटदेशे रुधिरं स्रवञ्च
यस्याहवेन प्रविशेच्च वक्रं
तत्सोमपानेन किलास्य तुल्यं
संग्रामदेशे विधिवच्च दृष्टं ॥ ३९ ॥
अनाथं ब्राह्मणं प्रेतं ये वहंति द्विजातयः
पदे पदे यज्ञफलमानुपूर्व्या लभंति ते ॥ ४० ॥
न तेषामशुभं किंचित्पापं वा शुभकर्मणां
जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥ ४१ ॥

असगोत्रमबंधुं च प्रेतीभूतं द्विजोत्तमं
वहित्वा च दहित्वा च प्राणायामेन शुध्यति॥ ४२॥
अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा
स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥ ४३
क्षत्रियं मृतमज्ञानाद्ब्राह्मणोयोनुगच्छति
एकाहमशुचिर्भूत्वा पंचगव्येन शुध्यति ॥ ४४॥
शवं तु वैश्यमज्ञानाद्ब्राह्मणोह्यनुगच्छति
कृत्वा शौचं द्विरात्रं च प्राणायामान् षडाचरेत् ४५
प्रेतीभूतं तु यः शूद्रं ब्राह्मणोज्ञानदुर्बलः
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥४६ ॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगां
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति॥ ४७॥
विनिर्वर्त्य यदा शूद्राउदकांतमुपस्थिताः
द्विजैस्तदानुगंतव्या एषधर्मः सनातनः ॥४७॥

इति श्रीपाराशरीये धर्मशास्त्रे जननमरणसूतका
दिशुद्धिर्नाम तृतीयोध्यायः



## चतुर्थोध्यायः



### आत्मघातिनां शुद्धिः

अतिमानादतिक्रोधात्स्नेहाद्वा यदि वा भयात्
उद्बध्नीयात्स्त्री पुमान्वा गतिरेषा विधीयते ॥ १ ॥
पूयशोणितसंपूर्णे त्वंधे तमसि मज्जति
षष्टिर्वर्षसहस्राणि नरकं प्रतिपद्यते ॥ २ ॥
नाशौचं नोदकं नाग्निं नाश्रुपातं च कारयेत्
वोढारोग्निप्रदातारः पाशच्छेदकरास्तथा ॥ ३ ॥
तप्तकृच्छ्रेण शुध्यंतीत्येवमाह प्रजापतिः
गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम् ॥४॥
संस्पृशंति तु ये विप्रा वोढारोदाहकाश्च ये
अन्ये ये चानुगंतारः पाशच्छेदकराश्च ये ॥ ५ ॥
तप्तकृच्छ्रेण शुद्धास्ते कुर्युर्ब्राह्मणभोजनं
अनडुत्सहितां गाँ च दद्युर्विप्राय दक्षिणां ॥ ६ ॥
त्र्यहमुष्णं पिबेद्वारि त्र्यहमुष्णं पिबेत्पयः
त्र्यहमुष्णं पिबेत्सर्पिर्वायुभक्षोदिनत्रयं ॥ ७ ॥

षट्पलं तु पिबेदंभस्त्रिपलं तु पयः पिबेत्

पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते ॥ ८ ॥

योवै समाचरेद्विप्रः पतितादिष्वकामतः

पंचाहं वा दशाहं वा द्वादशाहमथापि वा ॥९॥

मासार्द्धं मासमेकं वा मासद्वयमथापि वा

अब्दार्द्धमब्दमेकं वा भवेदूर्ध्वं तु तत्समः ॥ १० ॥

त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत्

तृतीये चैव पक्षे तु कृच्छ्रं सांतपनं चरेत् ॥११॥

चतुर्थे दशरात्रं स्यात्पराकः पंचमे मतः

कुर्याच्चांद्रायणं षष्ठे सप्तमे त्वैंदवद्वयं ॥ १२ ॥

शुध्यर्थमष्टमे चैव षण्मासान्कृच्छ्रमाचरेत्

पक्षसंख्याप्रमाणेन सुवर्णान्यपि दक्षिणा ॥१३॥

ऋतुस्नाता तु या नारी भर्त्तारं नोपगच्छति

सा मृता नरकं याति विधवा च पुनः पुनः॥१४॥

ऋतुस्नातां तु योभार्य्यां सन्निधौ नोपगच्छति

घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥१५॥

दरिद्रं व्याधितं धूर्तं भर्तारं यावमन्यते

सा शुनी जायते मृत्वा सूकरी च पुनः पुनः॥१६॥

पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत्
आयुष्यं हरते भर्त्तुः सा नारी नरकं व्रजेत्॥१७॥
अपृष्ट्वा चैव भर्तारं या नारी कुरुते व्रतं
सर्वं तद्राक्षसान्गच्छेदित्येवं मनुरब्रवीत् ॥ १८ ॥
बांधवानां सजातीनां दुर्वृत्तं कुरुते तु या
गर्भपातं च या कुर्यान्न तां संभाषयेत्क्वचित्॥१९॥
यत्पापं ब्रह्महत्यायाद्द्विगुणं गर्भपातने
प्रायश्चित्तं न तस्यास्स्यात्तस्यास्त्यागो विधीयते २०
न कार्यमावसथ्येन नाग्निहोत्रेण वा पुनः
सभवेत्कर्मचांडालो यस्तु कर्मपराङ्मुखः ॥२१॥
ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति
सक्षेत्री लभते बीजं न बीजी भागमर्हति॥२२॥
तद्वत्परस्त्रियाः पुत्रौ द्वौ सुतौ कुंडगोलकौ
पत्यौ जीवति कुंडस्तु मृते भर्तरि गोलकः॥२३॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः
दद्यान्माता पिता वा यं सपुत्रोदत्तकोभवेत्॥२४॥
परिवित्तिः परिवेत्ता च यया च परिविद्यते
सर्वे ते नरकं यांति दातृयाजकपंचमाः ॥ २५ ॥

द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्रएव च
कृच्छ्रातिकृच्छ्रौ दाता तु होता चांद्रायणं चरेत्॥ २६
कुब्जवामनषंढेषु गद्गदेषु जडेषु च
जात्यंधबधिरे मूके न दोषः परिविंदतः ॥ २७ ॥
पितृव्यपुत्रः सापत्नः परनारीसुतस्तथा
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ २८ ॥
ज्येष्ठोभ्राता यदा तिष्ठेदाधानं नैव कारयेत्
अनुज्ञातस्तु कुर्वीत शंखस्य वचनं यथा ॥ २९ ॥
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ
पंचस्वापत्सु नारीणां पतिरन्यो विधीयते ॥३०॥
मृते भर्त्तरि या नारी ब्रह्मचर्यव्रते स्थिता
सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः॥३१॥
तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानुषे
तावत्कालं वसेत्स्वर्गे भर्त्तारं यानुगच्छति ॥३२॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्
एवं स्त्री पतिमुद्धृत्य तेनैव सह मोदते ॥ ३३ ॥
इति श्रीपाराशरे धर्मशास्त्रे उद्बंधनादिमृतशुद्धिर्नाम
चतुर्थोध्यायः

## पंचमोध्यायः



### श्वादिदंशादौ शुद्धिविचारः

वृकश्वानश्रृगालाद्यैर्दष्टोयस्तु द्विजोत्तमः
स्नात्वा जपेत्सगायत्रीं पवित्रां वेदमातरं ॥ १ ॥
गवां श्रृंगोदकस्नानान्महानद्योस्तु संगमे
समुद्रदर्शनाद्वापि शुना दष्टः शुचिर्भवेत् ॥ २ ॥
वेदविद्याव्रतस्नातः शुना दष्टोद्विजोयदि
सहिरण्योदकैः स्नात्वा घृतं प्राश्य विशुध्यति॥ ३॥
अव्रतः सव्रतोवापि शुना दष्टोभवेद्विजः
प्रणिपाताद्भवेत्पूतोविप्रैश्चक्षुर्निरीक्षितः ॥ ४ ॥
सव्रतस्तु शुना दष्टोयस्त्रिरात्रमुपावसेत्
घृतं कुशोदकं पीत्वा व्रतशेषं समापयेत् ॥ ५ ॥
शुना घ्रातावलीढस्य नखैर्विलिखितस्य च
अद्भिः प्रक्षालनं प्रोक्तमग्निना चावधूलनं ॥६॥
ब्राह्मणी तु शुना दष्टा जंबुकेन वृकेन वा
उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥७॥

कृष्णपक्षे यदा सोमो न दृश्येत कदाचन
यां दिशं व्रजते सोमस्तां दिशं चावलोकयेत्॥८॥
असद्ब्राह्मणके ग्रामे शुना दष्टोद्विजोत्तमः
वृषं प्रदक्षिणीकृत्य सद्यः स्नात्वा शुचिर्भवेत्॥९॥
चांडालेन श्वपाकेन गोभिर्विप्रोहतोयदि
आहिताग्निर्हतोविप्रोविषेणात्महतोयदि ॥ १० ॥
दहेत्तं ब्राह्मणोविप्रोलोकाग्नौ मंत्रवर्जितम्॥११॥
स्पृष्ट्वा वोढ्वा च दग्ध्वा च सपिंडेषु च सर्वदा
प्राजापत्यं चरेत्पश्चाद्विप्राणामनुशासनात्॥१२॥
दग्ध्वास्थीनि पुनर्गृह्य क्षीरेण क्षालयेद्विजः
स्वेनाग्निना स्वमंत्रेण पृथगेतत्पुनर्दहेत् ॥ १३ ॥
आहिताग्निर्द्विजः कश्चित्प्रवसन्कालचोदितः
देहनाशमनुप्राप्तस्तस्याग्निर्वसते गृहे ॥ १४ ॥
प्रेताग्निहोत्रसंस्कारः श्रूयतामृषिपुंगवाः
कृष्णाजिनं समास्तीर्य कुशैस्तं पुरुषाकृति॥१५॥
षट्शतानि शतं चैव पलाशानां च वृंततः
चत्वारिंशच्छिरे दद्याच्छतं कंठे तु विन्यसेत्॥१६॥

बाहुभ्यां दशकं दद्यादंगुलीषु दशैव तु
शतं तु जघने दद्याद्विशतं तूदरे तथा ॥ १७ ॥
दद्यादष्टौ वृषणयोः पंच मेढ्रे तु विन्यसेत्
एकविंशतिमूरुभ्यां द्विशतं जानुजंघयोः ॥ १८ ॥
पादांगुलीषु दद्यात्षट् यज्ञपात्रं ततोन्यसेत्
शम्यां शिश्ने विनिक्षिप्य अरणिं मुष्कयोरपि ॥ १९ ॥
जूहूं च दक्षिणे हस्ते वामे तूपभृतं न्यसेत्
पृष्ठे तूलूखलं दद्यात्पृष्ठे च मुसलं न्यसेत् ॥ २० ॥
उरसि क्षिप्य दृषदं तंडुलाज्यतिलान्मुखे
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीं च चक्षुषोः २१
कर्णौ नेत्रे मुखे घ्राणे हिरण्यशकलं न्यसेत्
अग्निहोत्रोपकरणमशेषं तत्र निक्षिपेत् ॥ २२ ॥
असौ स्वर्गाय लोकाय स्वाहेत्येकाहुतिं सकृत्
दद्यात्पुत्रोथवा भ्राताप्यन्योवापि च बांधवः २३
यथा दहनसंस्कारस्तथा कार्यं विचक्षणैः
ईदृशं तु विधिं कुर्याद्ब्रह्मलोकगतिः स्मृता
दहंति ये द्विजास्तं तु ते यांति परमां गतिं ॥ २४ ॥

अन्यथा कुर्वते कर्म त्वात्मबुध्या प्रचोदिताः
भवंत्यल्पायुषस्ते वै पतंति नरकेशुचौ ॥ २५ ॥

इति श्रीपाराशरीये धर्मशास्त्रे श्वादिदष्टशुद्धिर्नाम पंचमोध्यायः

---

## षष्ठोध्यायः

### साधारणप्राणिहत्याशुद्धिः

अतः परं प्रवक्ष्यामि प्राणिहत्यासु निष्कृतिं
पराशरेण पूर्वोक्तांमण्वर्थेपि च विस्तृतां ॥ १ ॥
क्रौंचसारसहंसांश्च चक्रवाकं च कुक्कुटं
जालपादं च शरभं हत्वाहोरात्रतः शुचिः ॥ २ ॥
बलाकाटिट्टिभौ वापि शुकपारावतावपि
अटीनबकघाती च शुध्यते नक्तभोजनात् ॥ ३ ॥
वृककाककपोतानां सारीतित्तिरघातकः
अंतर्जलउभे संध्ये प्राणायामेन शुध्यति ॥ ४ ॥
गृध्रश्येनशशादीनामुलूकस्य च घातकः
अपक्वाशी दिनं तिष्ठेत्त्रिकालं मारुताशनः ॥ ५ ॥

वल्गुलीटिट्टिभानां च कोकिलाखंजरीटयोः
लाविकारक्तपक्षाणां शुध्यते नक्तभोजनात्॥६॥
कारंडवचकोराणां पिंगलाकुररस्य च
भारद्वाजादिकं हत्वा शिवं संपूज्य शुध्यति॥७॥
भेरुंडचाषभासाँश्च पारावतकपिंजलान्
पक्षिणां चैव सर्वेषामेकरात्रमभोजनं ॥ ८ ॥
हत्वा मूषकमार्जारसर्पाजगरडुंडुभान्
कृसरं भोजयेद्विप्रोलोहदंडं च दक्षिणां ॥ ९ ॥
शिशुमारं तथा गोधां हत्वा कूर्मं च शल्यकं
वृंताकफलभक्षी चाप्यहोरात्रेण शुध्यति॥१०॥
वृकजंबुकऋक्षाणां तरक्षूणां च घातकः
तिलप्रस्थं द्विजे दद्याद्वायुभक्षोदिनत्रयं ॥११॥
गजस्य च तुरंगस्य महिषोष्ट्रस्य घातने
प्रायश्चित्तमहोरात्रं त्रिसंध्यमवगाहनं ॥ १२ ॥
कुरंगं वानरं सिंहं चित्रं व्याघ्रं च घातयन्
शुध्यते सत्रिरात्रेण विप्राणां तर्प्पणेन च॥१३॥
मृगरोहिवराहाणामवेर्बस्तस्य घातकः
अफालकृष्टमश्नीयादहोरात्रमुपोष्य सः ॥ १४॥

एवं चतुष्पदानां च सर्वेषां वनचारिणां
अहोरात्रोषितस्तिष्ठेज्जपन्वै जातवेदसं ॥ १५ ॥
शिल्पिनं कारुकं शूद्रं स्त्रियं वा यस्तु घातयेत्
प्राजापत्यद्वयं कृत्वा वृषैकादश दक्षिणा॥ १६॥
वैश्यं वा क्षत्रियं वापि निर्दोषं यस्तु घातयेत्
सोपि कृच्छ्रद्वयं कुर्याद्द्वाविंशद्दक्षिणां ददेत्॥ १७॥
वैश्यं शूद्रं क्रियासक्तं विकर्मस्थं द्विजोत्तमं
हत्वा चान्द्रायणं कुर्यात्त्रिंशद्गाश्चैव दक्षिणां॥ १८॥
चाण्डालं हतवान्कश्चिद्ब्राह्मणोयदि कंचन
प्राजापत्यं चरेत्कृच्छ्रं गोद्वयं दक्षिणां ददेत्॥ १९॥
क्षत्रियेणापि वैश्येन शूद्रेणैवेतरेण वा
चाण्डालस्य वधे प्राप्ते कृच्छ्रार्द्धेन विशुध्यति॥ २०॥
चौरः श्वपाकश्चांडालोविप्रेणापि हतोयदि
अहोरात्रोषितः स्नात्वा पंचगव्येन शुध्यति ॥ २१॥
श्वपाकं वापि चांडालं विप्रः संभाषते यदि
द्विजसंभाषणं कुर्यात्सावित्रीं वा सकृज्जपेत्॥ २२॥
चाण्डालैः सह सुप्ते तु त्रिरात्रमुपवासयेत्
चाण्डालैकपथं गत्वा गायत्रीस्मरणाच्छुचिः॥ २३॥

चाण्डालदर्शने सद्यआदित्यमवलोकयेत्
चाण्डालस्पर्शने चैव सचैलं स्नानमाचरेत्॥२४॥
चांडालखातवापीषु पीत्वा सलिलमग्रजः
अज्ञानादेकभक्तेन त्वहोरात्रेण शुध्यति ॥२५॥
चांडालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलं
गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात्॥२६॥
चांडालघटसंस्थं तु यत्तोयं पिबति द्विजः
तत्क्षणात्क्षिपते यस्तु प्राजापत्यं समाचरेत्॥२७॥
यदि न क्षिपते तोयं शरीरे यस्य जीर्य्यति
प्राजापत्यं न कर्तव्यं कृच्छ्रं सान्तपनं चरेत् ॥२८॥
चरेत्सान्तपनं विप्रः प्राजापत्यमनन्तरः
तदर्द्धं तु चरेद्वैश्यः पादं शूद्रस्तदाचरेत् ॥ २९ ॥
भांडस्थमंत्यजानां तु जलं दधि पयः पिबेत्
ब्राह्मणः क्षत्रियोवैश्यः शूद्रश्चैव प्रमादतः ॥३०॥
ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः
शूद्रस्य चोपवासेन तथा दानेन शक्तितः॥३१॥
भुंक्तेऽज्ञानाद्विजश्रेष्ठश्चांडालान्नं कथंचन
गोमूत्रयावकाहारोदशरात्रेण शुध्यति ॥ ३२ ॥

एकैकं ग्रासमश्नीयाद्गोमूत्रे यावकस्य च
दशाहनियमस्थस्य व्रतं तत्तु विनिर्दिशेत् ॥३३॥
अविज्ञातश्च चाण्डालोयत्र वेश्मनि तिष्ठति
विज्ञातरूपं संन्यस्य द्विजाः कुर्युरनुग्रहं ॥ ३४ ॥
मुनिवक्त्रोद्गतान्धर्मान्गायंतोवेदपारगाः
पतंतमुद्धरेयुस्तं धर्मज्ञाः पापसंकटात् ॥ ३५॥
दध्ना च सर्पिषा चैव क्षीरगोमूत्रयावकं
भुंजीत सह भृत्यैश्च त्रिसंध्यमवगाहनम् ॥ ३६॥
त्र्यहं भुंजीत दध्ना च त्र्यहं भुंजीत सर्पिषा
त्र्यहं क्षीरेण भुंजीत्त एकैकेन दिनत्रयं ॥ ३७ ॥
भावदुष्टं न भुंजीत नोच्छिष्टकृमिदूषितं
दधिक्षीरस्य त्रिपलं पलमेकं घृतस्य तु ॥ ३८ ॥
भस्मना तु भवेच्छुद्धिरुभयोः कांस्यताम्रयोः
जलशौचेन वस्त्राणां परित्यागेन मृण्मयं ॥ ३९॥
कुसुंभगुडकार्पासलवणं तैलसर्पिषी
द्वारे कृत्वा तु धान्यानि दद्याद्वेश्मनि पावकं॥४०॥
एवं शुद्धस्ततः पश्चात्कुर्याद्ब्राह्मणतर्पणं
विंशतिं गा वृषं चैकं दद्याद्विप्रेषु दक्षिणां ॥४१॥

पुनर्लेपनखानेन होमजप्येन शुध्यति
आधारेण च विप्राणां भूमिदोषोन विद्यते॥ ४२॥
चाण्डालैः सह संपर्के मासं मासार्द्धमेव च
गोमूत्रयावकाहारोमासार्द्धेन विशुध्यति ॥ ४३॥
रजकी चर्मकारी च लुब्धकी वेणुजीविनी
चातुर्वर्ण्यस्य तु गृहेष्वविज्ञाता तु तिष्ठति ॥ ४४॥
ज्ञात्वा तु निष्कृतिं कुर्यात्पूर्वोक्तस्यार्द्धमेव हि
गृहदाहं न कुर्वीत शेषं सर्वं च कारयेत् ॥ ४५ ॥
गृहस्याभ्यंतरं गच्छेच्चांडालोयदि कस्यचित्
तमगाराद्विनिःसार्य्य मृद्भाण्डं तु विसर्जयेत् ॥ ४६॥
रसपूर्णं तु मृद्भाण्डं न त्यजेत्तु कदाचन
गोमयेन तु संमिश्रैर्जलैः प्रोक्षेद्गृहं तथा ॥ ४७ ॥
ब्राह्मणस्य व्रणद्वारे पूयशोणितसंभवे
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत्॥ ४८॥
गवां मूत्रपुरीषेण दधिक्षीरेण सर्पिषा
त्र्यहंस्नात्वा च पीत्वा च कृमिदुष्टः शुचिर्भवेत् ४ ९
क्षत्रियश्च सुवर्णस्य पंच माषान्प्रदाय तु
गोदक्षिणां तु वैश्यस्याप्युपवासं विनिर्दिशेत्

शूद्राणां नोपवासः स्याच्छूद्रोदानेन शुध्यति ॥५०

अच्छिद्रमिति यद्वाक्यं वदंति क्षितिदेवताः
प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलं हि तत् ॥५१॥

जपच्छिद्रं तपश्छिद्रं छिद्रं यत् यज्ञकर्मणि
सर्वं भवति निश्छिद्रं ब्राह्मणैरुपपादिते ॥ ५२ ॥

व्याधिव्यसनिनि श्रांते दुर्भिक्षे डामरे तथा
उपवासोव्रतं होमोद्विजसंपादितानि वा ॥ ५३ ॥

अथवा ब्राह्मणास्तुष्टाः सर्वं कुर्वंत्यनुग्रहं
सर्वान् कामानवाप्नोति द्विजसंपादितैरिह ॥ ५४॥

दुर्बलेऽनुग्रहः कार्यस्तथा वै बालवृद्धयोः
ततोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहः स्मृतः॥ ५५॥

स्नेहाद्वा यदिवा लोभाद्भयादज्ञानतोपिवा
कुर्वंत्यनुग्रहं ये तु तत्पापं तेषु गच्छति ॥ ५६॥

शरीरस्यात्यये प्राप्ते वदंति नियमं तु ये
महत्कार्योपरोधे च न स्वस्थस्य कदाचन ॥५७॥

स्वस्थस्य मूढाः कुर्वंति वदंति नियमं तु ये
ते तस्य विघ्नकर्तारः पतंति नरकेशुचौ ॥ ५८ ॥

स्वयमेव व्रतं कृत्वा ब्राह्मणं योवमन्यते
वृथा तस्योपवासस्स्यान्नच पुण्येन लिप्यते ॥५९॥
सएव नियमोमाह्योयमेकोपि वदेद्द्विजः
कुर्याद्वाक्यं द्विजानां तु अन्यथा भ्रूणहा भवेत्॥६०॥
ब्राह्मणाजंगमं तीर्थं तीर्थभूताहि साधवः
तेषां वाक्योदकेनैव शुध्यंति मलिनाजनाः॥६१॥
ब्राह्मणायानि भाषंते मन्यंते तानि देवताः
सर्वदेवमया विप्रा न तद्वचनमन्यथा ॥ ६२ ॥
उपवासोव्रतं चैव स्नानं तीर्थं जपस्तपः
विप्रैः संपादितं यस्य संपूर्णं तस्य तत्फलं ॥ ६३॥
अन्नाद्ये कीटसंयुक्ते मक्षिकाकेशदूषिते
तदंतरा स्पृशेच्चापस्तदन्नं भस्मना स्पृशेत् ॥ ६४॥
भुंजानश्चैव योविप्रः पादं हस्तेन संस्पृशेत्
स्वमुच्छिष्टमसौ भुंक्ते योभुंक्ते मुक्तभाजनः॥६५॥
पादुकास्थोन भुंजीत न पर्यंकस्थितोपिवा
श्वानचाण्डालदृष्टौच भोजनं परिवर्जयेत् ॥६६॥
यदन्नं प्रतिषिद्धं स्यादन्नशुद्धिस्तथैव च
यथा पराशरेणोक्तं तथैवाहं वदामि वः ॥ ६७ ॥

श्रुतं द्रोणाधिकस्यान्नं काकश्वानोपघातितं

केनेदं शुध्यते चेति ब्राह्मणेभ्योनिवेदयेत् ॥६८॥

काकश्वानावलीढं तद्द्रोणान्नं न परित्यजेत् ॥६९॥

वेदवेदांगविद्विप्रैर्द्धर्मशास्त्रानुपालकैः

प्रस्थोद्वात्रिंशतिद्रोणः स्मृतोद्विप्रस्थआढकः॥७०॥

ततोद्रोणाढकस्यान्नं श्रुतिस्मृतिविदोविदुः ॥ ७१॥

काकश्वानावलीढं तु गवाघ्रातं खरेण वा

स्वल्पमन्नं त्यजेद्विप्रः शुद्धिर्द्रोणाढके भवेत्॥७२॥

अन्नस्योद्धृत्य तन्मात्रं यच्च लालाहतं भवेत्

सुवर्णोदकमभ्युक्ष्य हुताशेनैव तापयेत् ॥ ७३ ॥

हुताशनेन संस्पृष्टं सुवर्णसलिलेन च

विप्राणां ब्रह्मघोषेण भोज्यं भवति तत्क्षणात्॥७४॥

स्नेहोवा गोरसोवापि तत्र शुद्धिः कथं भवेत्

अल्पं परित्यजेत्तत्र स्नेहस्योत्पवनेन च

अनलज्वालया शुद्धिर्गोरसस्य विधीयते ॥७५॥

इति श्रीपाराशरीये धर्मशास्त्रे प्राणिहत्यादिनिष्कृतिर्नाम षष्ठोध्यायः

## सप्तमोध्यायः



### द्रव्यशुद्धिप्रकरणं

अथातोद्रव्यशुद्धिस्तु पराशरवचोयथा
दारवाणां तु पात्राणां तक्षणाच्छुद्धिरिष्यते ॥१॥
भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति
रजसा शुध्यते नारी विकलं या न गच्छति॥२॥
नदीवेगेन शुध्येत लेपोयदि न दृश्यते ॥ ३ ॥
वापीकूपतडागेषु दूषितेषु कथंचन
उद्धृत्य वै कुंभशतं पंचगव्येन शुध्यति ॥ ४ ॥
अष्टवर्षाभवेद्गौरी नववर्षा तु रोहिणी
दशवर्षा भवेत्कन्या अतऊर्ध्वं रजस्वला ॥ ५ ॥
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति
मासि मासि रजस्तस्याः पिबंति पितरोनिशं॥६॥
माता चैव पिता चैव ज्येष्ठोभ्राता तथैव च
त्रयस्ते नरकं यांति दृष्ट्वा कन्यां रजस्वलां ॥७॥

यस्तां समुद्वहेत्कन्यां ब्राह्मणोमदमोहितः
असंभाष्योह्यपांक्तेयः सविप्रोवृषलीपतिः ॥ ८ ॥
यत्करोत्येकरात्रेण वृषलीसेवनं द्विजः
सभैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्विशुध्यति ॥ ९ ॥
अस्तं गते यदा सूर्ये चाण्डालं पतितं स्त्रियं
सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधीयते ॥ १० ॥
जातवेदः सुवर्णं च सोममार्गं विलोक्य च
ब्राह्मणानुमतश्चैव स्नानं कृत्वा विशुध्यति ॥ ११ ॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी ब्राह्मणीं तथा
तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुध्यति ॥ १२ ॥
स्पृष्टा रजस्वलान्योन्यं ब्राह्मणी क्षत्रियां तथा
अर्द्धकृच्छ्रं चरेत्पूर्वा पादकृच्छ्रमनंतरा ॥ १३ ॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी वैश्यजां तथा
पादहीनं चरेत्पूर्वा पादमेकमनंतरा ॥ १४ ॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजां तथा
कृच्छ्रेण शुध्यते पूर्वा शूद्री दानेन शुध्यति ॥ १५ ॥
स्नाता रजस्वला या तु चतुर्थेऽहनि शुध्यति
कुर्याद्रजोनिवृत्तौ तु दैवपित्र्यादिकर्म च ॥ १६ ॥

